२,१३१;३,१२८; ऋप्रा ४,९४; १६, ३६; ५०; -स्त्येन ऋअ २,१,१७०.

आगस्ती[a]- पावा ६, ४, १४९.

२आगस्त्य[b]- पा ४,१,१०५; -०स्त्य वैध ४, ८,१-४; -स्त्यः ऋअ २, ९, २५; साअ १, ४७४; -स्त्यानि शांश्रौ ९,२०, ११; -स्त्येभ्यः शांश्रौ ९,२०,१२

आगस्ती[c]- -स्त्यौ अप १, ३,१.

आगस्त- पा ४, २,१११.

आगस्त्य-कौण्डिन्य- -न्ययोः पा २,४,७०.

अगस्तीय[d]- पावा ६,४,१४९.

अगस्त्य-गृहपतिक[e]- -कम् आपश्रौ २३, ११, ११; हिश्रौ १८,४,१४.

?अगस्त्य-भागिणीय[f]- -याणाम् चाअ ३०:२०.

अगस्त्य-वत् वैध ४, ८,१-४.

अगस्त्य-वसिष्ठ[g]- -ष्ठौ ऋअ २, १,१६६.

φअगस्त्यस्य-निष्केवल्य[h]- -ल्यम् आपश्रौ १४,१९,१०;११.

अगस्त्या(स्त्य-आ)श्रम- -मे विध ८५,२९.

अगस्त्या(स्त्य-अ)ष्टम[i]- -मानाम् बौश्रौप्र १:१; ५४:१४.

अगस्त्ये(स्त्य-इ)न्द्र-मरुत्[g]- -रुताम् ऋअ २,१,१६५.

अ-गाथ[j]- -थः अप्राय ३;८.

अ-गाध- -धे कौगृ १,९,१६; शांगृ १, १५,२०.

अ-गायत्- -यन् लाश्रौ १०,१९,१०.

अगार[k]- पाउभो २, ३, ४०; -रम् बौश्रौ २,१२:२१; १३:१६; २९, ६:१५; वैश्रौ २१, १७: ८; हिश्रौ १६, ३, २; आगृ ३, ७, ७; ४, ४, १३; कौगृ, शांगृ ३, २, १; आग्निगृ १, ६, ३: ४१; ३,८,१:१३; आपगृ १७, ७; १३; १८, १२; बौगृ १, ६, २२; ३,३, १६; ५, ५; ९; १९; बौपि १, १४:१२; ३, ४, २१; भागृ १, २६:३; २, ५:३; वैगृ ३,१८:३; हिगृ १,२२,६; २३,२; २,४, ७; हिपि १४:२; जैगृ २,७:२; आपध १, २८, ११; हिध १, ७, ४७; -रस्य आगृ २,९,९; आपगृ ६,८; १०; १७,७; बौगृ १,२,२; ४; २, ८, १७; २५;३,५,९; भागृ १,२३: १; हिपि १२:२; जैगृ १,२३: ११; आपध २, ३, २२; २३; हिध २, १,५२; ५३; -राणि आग्निगृ १,६,१:७; आपध १, २८, १८; बौध २, १, ३; वाध १०,७; हिध १,६, ६४; ७,५४; -रात् गोगृ १, १, १६; द्राग १, ५,५; -रे बौश्रौ २४, ३२:८; २४; आगृ १,७,२१; आग्निगृ २, ४,१०:१३;५,२:१; ६:२४; बौगृ २,९,२३†; ३,६,१; भागृ ३, १३:६; वैगृ २, १२:३; जैगृ २,७:१; वाध १०, २३; आपध २, ४, १४; हिध २, १, ६७; -रेषु शंध १६९; बौध ३, ४, ३.

अगार-दहन- -ने बौश्रौ २९, १: ११.

अगार-दाह- -हे आश्रौ ३, १३, ४.

अगार-प्रवेश- -शम् भागृ २,४:१.

अगार-मध्य- -ध्ये आग्निगृ २,५,२: १; बौगृ ३,६,१.

अगार-स्तूप- -पे आपगृ १९, ७.

अगार-स्थूणा-विरोहण- -णे आपगृ २३,९.

अगारा(र-अ)न्त[l]- -न्तात् पा ४, ४, ७०.

अगारा(र-अ)वकाश- -शम् आपगृ १७,१.

अगारै(र-ए)कदेश- -शे पा ३, ३, ७९.

अ-गार्ग्य-काश्यप-गालव[l]- -वानाम् पा ८,४,६७.

अ-गिल[m]- -लस्य पावा ६,३,७०.

अ-गीत- -तम् निसू २,१:१२.

अगीतो(त-ऊ)ह[l]- -हाः निसू २, १:२५.

१अ-गुण[n]- -णः काश्रौ ६, ७, २३; -णम् विध ९,७; -णात् मीसू

---

*a*) व्यप. (अगस्त्य-पत्नी-)। पुंयोगात् ङीषन्ते यलोपः। पाम. पाका. तु आगस्ती- (गोत्रापत्येऽणि ⌊पा ४, १,११४⌋ ङीपि) इति विशेषः। *b*) नाप. (अगस्त्यपुत्र-, सूक्त-)। गोत्रापत्ये यञि प्र. य-लोपः। सूक्तपक्षे (शांश्रौ) तेनदृष्टीयः अण् प्र. (पा ४, २,७) इति विशेषः। *c*) विप. (उत्तरा-प्रोष्ठपदा-)। सास्यदेवतीयेऽणि स्त्री. ङीपि यलोपः (पावा ६,४,१४९)। *d*) शैषिके छे य-लोपः (तु. पासि.; वैतु. पाम. पाका. प्रभृ. आगस्त्य->आग° इति)। *e*) विप.। बस.। आग° इति आपश्रौ पाठः ऐकान्तिकः। *f*) नाप.। षस.। उप. पाठः? भगिनी-> ⌊अपत्यार्थे⌋ °भागिनेय-> -यानाम् इति शोधः। *g*) द्वस.। *h*) नाप. (शस्त्र-विशेष-)। *i*) विप.। बस.। *j*) उप. गाथा- द्र.। *k*) नाप. व्यु.?। *l*) तस.>द्वस.। *m*) तस.। उप.=गिर- (<√गॄ निगरणे)। *n*) विप.। बस.। उप. =वैशिष्ट्य-।

२,३,६[a]; –णे मीसू २,२,२४.
१अगुण-त्व- -त्वात् मीसू १०, ७, ४४.
अगुणा(ण-आ)ख्यान[b]- -नम् काश्रौ १२,४,२०.
**२अ-गुण**[c]- -णे पावा १,४,५१.
२अगुण-त्व- -त्वम् मीसू ११, १, १५.
**३अ-गुण**[d]-
३अगुण-त्व- -त्वम् पावा ७, ३, ८५.
**अ-गुण-विधि**- -धिः पावा १,२,१.
**अ-गुप्त-दार**[e]- -रः शंध ३७८.
**अ-गुरु**[b]- -रवे आग्निगृ ३, ७, ३ : २६; बौपि २, २, ३; आपध १, १४,१५; हिध १,४,४७; –रोः आग्निगृ २, ७, १ : १; २; वाध १४, २०; –रौ पावा ३, १, १००.
**अ-गुरु-गवी**[f]- -वीनाम् आगृ २, १०,८.
**१अ-गुरु-तल्प**[g]- -ल्पे आपध १,२१, १०; हिध १,६,४०.
**२अ-गुरु-तल्प**[h]- -ल्पः गौध २१,८.
**अ-गुरु-प्रयुक्त**[i]- -क्ताः गोगृ ३, १, ३१.
**अ-गुरू(रु-उ)पो(प-उ)त्तमा(म-अ)र्थ**[j]- र्थम् पावा ४,१,७९.
**अ-गूहनीय**- -यः या ११,१६.
**†अ-गृभीत**[k]- -तः आश्रौ २,१८,१५; बौश्रौ १८,३१ : ५; –ताः आश्रौ २, १०, १८; आपश्रौ ७, १६, ७.
**अ-गृह-पति**-, °हपति-क- पा ६, २,१६०.
**अ-गृहीत**[k]- -तः आपश्रौ १४,२६,१†; २१,८, १; १७, ६; हिश्रौ १५, ६, २९†; –तम् आपश्रौ ९, ४, १२; –ताः आपश्रौ ११, २०, १०†; बौश्रौ १४, ६ : १३; हिश्रौ ७,८, ५३; –तेषु क्षुसू १, ११ : ४.
अगृहीता(त-अ)ग्नि[l]- -ग्नेः कप्र ३, ४,१४.
**अ-गृहीत्वा** शांश्रौ १३,११, २; काश्रौ २५, १३, ३०; बौश्रौ १४, ६ : १३; २९, ४ : १.
**अ-गृह्णत्**- -ह्णतः विध ६,१०.
**अ-गृह्यमाण-कारण**[e]- -णः वाध १, ७; आपध १, १२, ८; हिध १, ४, ८.
**अ-गृह्यमाण-विशेष**[e]- -षाणाम् मीसू ११,१,६७.
**१अ-गो**[k]- -गाम् पागृ ३, ११, १; –गौः हिश्रौ ६,८,८.
**२अ-गो**[k]-
†अगो-ता- -ताम् आपश्रौ १६, १६,१; वैश्रौ १८,१४ : ४.
**अ-गोः-प्रापण**[m]- -णम् काश्रौ ५, १०,१६.
**अ-गोत्र**[l]- -त्रात् पा ४, १, १५७; पावा ४,१,१५८; –त्रान् आग्निगृ ३,३,१ : ७.
**अ-गोत्रा(त्र-आ)दि**[e]- -दौ पा ८,१, ६९.
**अ-गोत्रा(त्र-अ)र्थ**[e]- -र्थम् पावा ४, १,७९.
**अ-गोपुच्छ-संख्या-परिमाण**[n]- -णात् पा ५,१,१९.
**†अ-गोरुध**[k]- -धाय आगृ १,१,४.
**अ-गोष्पद**[l]- -दम् कौसू ३९, २३; ऋत ४,६,१०.
**अ-गोह्य**[k]- -ह्यः या ११, १६; –ह्यस्य या ११,१६†.
**अ-गौः-पूर्व**[e]- -र्वे भाशि ९०.
**अ-गौपवन**[o]- -नम् काश्रौ १०,२,२०.
**अ-गौरा(र-आ)दि**[e]- -दयः पा ६,२, १९४.
**†अग्घा(ग्ध-अ)द्**[k]- -ग्धात् बौश्रौ ४, ११ : १२; १६ : २०; १४, १३ : १९.
**अग्ना**°, अग्नायी- अग्नि- द्र.
**अग्नि**[k]- पाग ४, २, ९०; ८, ४, ३९; –ग्नयः आपश्रौ ५, १८, १[2p]; हिश्रौ ३, ४, ५४[2p]; –०†ग्नयः आश्रौ ५,३, १५[4q]; शांश्रौ ६, १३,१[q]; काश्रौ ९,८, २३[q]; वैताश्रौ १८,८[3q]; –†ग्नये शांश्रौ ९, २३, ३[r]; आपश्रौ १०, ८, ५[s]; १६, ८, १३[s]; २०,८,५[s]; माश्रौ १,२,३,१८[t]; वैश्रौ १२,८ : १[s]; हिश्रौ ११, ३,२[s]; –ग्ना आश्रौ; –०ग्नाइ

*a*) वैतु. कासं. °णा इति । *b*) तस. । *c*) =अ-गौण- । तस. । *d*) तस. । उप. पाप्र. पारिभाषिक- । *e*) तस.>बस. । *f*) विप. । बस. >तस. उप. टजन्ते ङीप् । *g*) नाप. । तस.>षस. । *h*) विप. । बस.>षस. । *i*) विप. । तृस. > तस. । *j*) तस. > बस.>अस. > नित्यसमासः । *k*) वैप १ द्र. । *l*) विप. । बस. । *m*) तस. उप. पू.प.ष. अलुक् । वा. किवि. । *n*) बस.>द्वस. । *o*) तस. उप.<गोपवन- । *p*) एकतरत्र सपा. मै १,६,२ अग्नये इति पाभे. । *q*) पाभे. वैप १ परि. अग्नयः मा ५, ३४ टि. द्र. । *r*) = सपा. शांश्रा १९,२ । माश ६, २,१,१७ तु अग्निभ्यः इति पाभे. । *s*) पाभे. वैप १ परि. अग्नये मा ४, ७[x] टि. द्र. । *t*) पाभे. वैप १ परि. अग्नये तै १,१,८,१ टि. द्र. ।

आपश्रौ; –ग्निः आश्रौ १,९,५?[a]; ३,१०, ३१[b]; काश्रौ ५,३,२३[c]; आपश्रौ ३,१३,१[d];२०,१०[d];४, ९,३[e]; ८,४,२[f]; ९, १२, ११[g]; १८,१२[b]; माश्रौ १, ३,४,२३[h]; ४,१,२१[e]; ७,२,२३[i]; ६,१,५, २२†[i]; हिश्रौ ११, ७, ५४[j]; जैश्रौका १९†[k]; शांगृ १, १७, ९[l]; हिगृ १,२६,९[g]; बौध २,१, ३८[g]; –ग्निःऽ-ग्निः माश्रौ ५,१, २,६; –ग्निना आश्रौ; –†ग्निभिः शांश्रौ; –†ग्निभ्यः काश्रौ; –ग्नि-भ्याम् काश्रौ; –ग्निम् आश्रौ ३, ४, ३[m]; शांश्रौ ५, १८, २[m]; आपश्रौ १,१४, १२[n]; ४,४, ५[e]; १६, ८, १३[o]; माश्रौ १, ४, १, १३[e]; ५,२, ८, २७[m]; ६,१,३, २०[o]; वैताश्रौ २,१३[p]; मागृ१,६, २[o]; १३, ४[q]; –†ग्निम्-ऽग्निम् शांश्रौ; –ग्निषु आश्रौ; –ग्नी शांश्रौ; –†ग्नीन् शांश्रौ; –ग्नी-नाम् आश्रौ; –०ग्ने आश्रौ १, २,७[2e];२,१०,४[3r]; शांश्रौ १,४, १३[e]; काश्रौ २१, ४, २५[2r]; आपश्रौ २, १२, ६[e];५,६,३[4r]; १३,४[s]; २८,६[4t]; ६,१६,१०[r]; १३,१९, १०[r]; १४,१७, १[4r]; माश्रौ १, ६, १, ४[u]; ७, ३, १९[c]; ८, ४, ३६[v]; ६, १, ४, १५?[w]; वाश्रौ१,६,१,२१[c]; हिश्रौ १०, ३, ३३?[x]; आपमं २, २,१[y]; ६,१२[3z]; १९, ७†[a1]; शांगृ १, २५, ८[r]; आग्निगृ १, १,२ : ४[r]; मागृ १,११,१२†[b1]; २, ४,५[v]; हिगृ १,३,५[2r,y];६,२[r]; २,११, १†[a1]; कौसू ४५,११[v]; –†ग्नेः काश्रौ२,५,१५[c1]; आपश्रौ१,२४, ५[c1];माश्रौ १,२,५,१२[d1]; आपमं १, २, ७[d1]; २,१,४[e1]; आगृ १, १७, १२[e1]; आग्निगृ २, ७, २ : २३?[f1];४: १५?[f1]; हिगृ २, ६, १०[c1]; चाअ ४१ : २३[g1]; –ग्नेःऽ-ग्नेः माश्रौ ५, १,२, ६[2]; ९[2]; –ग्नौ आश्रौ ३, १०,३१[h1]; आपश्रौ ५, २८, ६[i1]; ९, १८, १२[h1].

अग्नायी[j1]– पा ४, १,३७; –यी वागृ १३, २†; अप ४८, १३४; बृदे १,११२; २, ७५;३, ६;९२; निघ ५,३; या ७,८; ९, ३३ɸ; †१२,४६ɸ; –†यीम् बृदे ३, ६; या ९, ३४; –य्यै शांश्रौ ४,१९,५.

आग्निक,का[k1]– -कः शुअ ३,७७; ४, ११८; –कम् वाश्रौ २,२,३, १६; वैश्रौ १८, १४ : १९; –कस्य वौश्रौ २६, १० : ३;

*a*) अग्निहो° इति पाठः? यनि. शोधः (तु. सपा. माश १,९,१,२०)। *b*) सपा. माश्रौ ३, ५, १४ अग्निहोत्रम् इति पाभे.। *c*) पाभे. वैप १ परि. अग्निः मा ५,९ टि. द्र.। *d*) पाभे. वैप. २, ३खण्डे यज्ञम् शां २६,६ टि. द्र.। *e*) पाभे. वैप १ परि. अग्निः काठ ४,१४ टि. द्र.। *f*) पाभे. वैप १ परि. अग्निः ऋ ६,१६,२८ टि. द्र.। *g*) पाभे. वैप १ परि. अग्निः तै ३,२,५,४[2] टि. द्र.। *h*) पाभे. वैप १,८१२ h टि. द्र.। *i*) पाभे. वैप १ बृहस्पतिः ऋ १,९०,९ टि. द्र.। *j*) अग्निज्यो° इति पाठः? यनि. इति च ज्यो° इति च शोधः (तु. सपा. मा १३,४०)। *k*) सपा. ऋ ७,१,१ अग्निम् इति पाभे.। *l*) =सपा. मंत्रा १,४,८ । पागृ १, ९,५ तु सूर्यः इति पाभे.। *m*) पाभे. वैप १, ८१६ b टि. द्र.। *n*) पाभे. वैप १ वेदिम् काठ ३१, १४ टि. द्र.। *o*) पाभे. वैप १ परि. अग्नये मा ४, ७[4] टि. द्र.। *p*) प्रक्षिप्तः पाठः इति (तु. काश्रौ ३, १, १२; आपश्रौ २,१२,१०)। *q*) पाभे. वैप १ वाताग्रम् तै १,७,७,२ टि. द्र.। *r*) पाभे. वैप १, १५८८ o टि. द्र.। *s*) पाभे. वैप १ स्तुतः शौ १९, ३, १ टि. द्र.। *t*) अग्नाग्ने इति पाठे अग्ने, अग्ने इति च्छेदः। *u*) सपा. आश्रौ २, २, ४ शांश्रौ २, ६, ७ आपश्रौ ६, १, ८ आपमं २, १५,१४ अनन्तम् इति पाभे.। *v*) पाभे. वैप १ त्वम् ऋ १०, ५१, ५ टि. द्र.। *w*) अग्ने इति पाठः? अग्रे इति शोधः (तु. सपा. मै ३, २, १; ४, १०, २ अग्रे)। *x*) अग्रे इति पाठः? यनि. शोधः। *y*) पाभे. वैप १ परि. अग्निः काठ ३५, १ टि. द्र.। *z*) सकृत् पाभे. वैप १, ८०९ g टि. द्र.। *a[1]*) पाभे. वैप १ त्वम् ऋ १०, १५, १३ टि. द्र.। *b[1]*) पाभे. वैप १ परि. अग्ने ऋ १०, ८५,३८ टि. द्र.। *c[1]*) पाभे. वैप १ परि. अग्नये तै १, १, ८,१ टि. द्र.। *d[1]*) पाभे. वैप १ परि. अग्नेः तै १, १, १०, १ टि. द्र.। *e[1]*) सपा. मंत्रा १, ६, ७ वायोः इति पाभे.। *f[1]*) पाठः? अग्ने इति शोधः (तु. सपा. मै १, ४, ३ प्रभृ.)। *g[1]*) अग्निः इति पाठः? यनि. शोधः (तु. सपा. काठ २२, १५ शौ ४,२३,१)। *h[1]*) सपा. तैब्रा ३, ७, ३, ६ पृथिव्याम् इति पाभे.। *i[1]*) सं. रूपमिति वदन् रुद्रदत्तो भ्रान्तः। *j[1]*) वैप १, परि च द्र.। *k[1]*) विप.। तस्येदमार्थे ठक्।

-काः बौश्रौ २२,३ : २^२; वैश्रौ १८, ६ : ४; -कानाम् बौश्रौ २६,१० : २५; -कानि काश्रौ १६,४, ३०; १८,५,५; २०,४, ९; बौश्रौ १०,५९ : १२; १५, ११ : ११; ३६ : २३; २६, १ : १८; वैश्रौ १८,६ : ८; -के काश्रौ २०,४, ७; -केन बौश्रौ २२,३ : २३;३०^२;९ : २८^२.

आग्निकी- -की आपश्रौ १४,३३,९; हिश्रौ १५,८,४२; माग़ृ १,२३,५; -कीः आपश्रौ १६,७,२;८,१३; वाश्रौ २,१,२, १८;३,४,१,४९; वैश्रौ १८,४ : १३;१५;६ : १३; हिश्रौ ११, २,२;३,२; -कीभिः काग़ृ ४४, ३; -क्या आपश्रौ १५,१,४;२०, ८,११; -क्याः भाश्रौ ११,१,४.

आग्निका(क-आ)श्वमेधिक- वर्जम् शुअ ४,५९.

आग्नेय[a]- पा ४,२, ३३; पावा ४, २, ८; ३३; -यः आश्रौ; -यम् आपश्रौ ६, ११, ५[b]; -ययोः ऋअ २, ३, ६; -यस्य शांश्रौ; -याः आश्रौ; -यात् शांश्रौ; -यान् काश्रौ; -यानाम् काश्रौ; -यानि आपश्रौ; -याभ्याम् हिश्रौ; -याय बौश्रौ; -ये आश्रौ; -येन शांश्रौ; -येषु क्षुसू; -यैः वाश्रौ; -यौ आश्रौ.

आग्नेयी- -यी शुअ २, २१?[c]; -यीः आपश्रौ; -यीभिः, -यीभ्याम् आश्रौ; -यीम्, -यीषु आपश्रौ; -य्यः काश्रौ १६, १, २७[d]; -य्या शांश्रौ; -य्याम् आश्रौ; -†य्यै भाग़ृ; -य्यौ आश्रौ.

आग्नेय-च्छन्दस्[e]- -न्दः निसू ६,१३ : ७.

आग्नेय-धर्म(क>)का[f]- -काः काश्रौसं ६ : ५.

आग्नेय-पाण्डु-पार्थिव[g]- -वानाम् पाग़ृ २, १४,९; १२; १४; १६.

आग्नेय-पावमा(न>)नी[h]- -न्याम् माश्रौ ६, २,४,९; वाश्रौ २,२,३,१३.

आग्नेय-प्रभृति- -ति बौश्रौ ५,८:१५; -तीनाम् बौश्रौ ५,८: २८; ३५; वाश्रौ ३,१, १, २१; -तीनि बौश्रौ ५,६ : ९; १६.

आग्नेय-मध्य[i]- -ध्यात् वाश्रौ १,३,५,१.

आग्नेय-मरुत्वतीय-पुरोडाश[j]- -शौ हिश्रौ १६,८,२०.

आग्नेय-मैत्रावरुणै(ण-ऐ)न्द्रै(न्द्र-ऐ)न्द्राग्न[k]- -ग्नम् जैश्रौका १५२.

आग्नेय-योनि[f]- -नि निसू ६, ७ : ४२.

आग्नेय-वत् आपश्रौ २,२०, २; मीसू २, ४, १५; ८, ३, ३; १०,६,७४[l];७,२५.

आग्नेय-विकार[m]- -राः आपश्रौ २४,३,४१; काश्रौसं ६ : १; हिश्रौ ३,८,३०; -रान् बौश्रौ २७,१४ : २१;२३.

आग्नेय-विध्य(धि-अन्त>)-न्ता[n]- -न्ताः काश्रौसं ७ : २†.

आग्नेय-व्रत[o]- -तस्य वैग़ृ २,१० : ५.

आग्नेय-श्यामाक- -कौ आपश्रौ ६, ३०, १९; वैश्रौ ८, २ : १.

आग्नेय-सं(ज्ञा>)ज्ञ[f]- -ज्ञस्य जैश्रौका १२९.

आग्नेय-सारस्वत-सौम्य-पौष्ण-बार्हस्पत्य-वैश्वदेवै(व-ऐ)न्द्र-मारुतै(त-ऐ)न्द्राग्न-सावित्र-वारुण[g]- -णान् काश्रौ ८,८,२५.

आग्नेय-सौम्य-वैष्णव[g]- -वान् वैताश्रौ १५,१.

आग्नेय-सौम्य-सावित्र-बार्हस्पत्य-त्वाष्ट्र-वैश्वानर[g]- -राः काश्रौ १५,९,८.

आग्नेय-स्थालीपाक[o]- -कः वौग़ृ २, ६,२३; द्राग़ृ २, २,१[p]; -कम् वैग़ृ ६, १४ : १०;

आग्नेया(य-आ)ग्नावैष्णव[g]- -वौ शांश्रौ ३, ११,७.

आग्नेया(य-अ)ग्नीषोमीय[g]- -यौ वैताश्रौ ३, ४.

आग्नेया(य-अ)ग्नीषोमीय-वत् मीसू ११,४,१८.

आग्नेया(य-आ)दि- -दि वैग़ृ १,११ : ६; -दीनि आपश्रौ १९, २३,१०; २५,१४; २२,२५,३; ७; वैश्रौ ८,११ : ५; हिश्रौ २२, ४, ७; १९; ५,१; २५; २३, ४, २; ४.

आग्नेया(य-आ)द्य- -द्ये कप्र ३, ६,१०.

---

*a*) वैप १, परि. च द्र. । *b*) पाभे. वैप १, ७८५ c टि. द्र. । *c*) पाठः? °यीम् इति शोधः? । *d*) आग्नेयः इति पाठः? यनि. शोधः । *e*) कस. वा तस. वा । *f*) बस. । *g*) द्वस. । *h*) वैप १ द्र. । *i*) तस. । *j*) द्वस.>कस. । *k*) समाहारे द्वस. । *l*) कासं. नोपलभ्यते । *m*) नाप. । तस. । *n*) तस.> बस. । *o*) कस. । *p*) 'आग्नेयः स्थालीपाकः' इत्यपि पाठः ।

आग्नेया (य-आ) द्य (दि-अ) न्त[a]- -न्तम् वैगृ १, ९ : १५; १४ : ४.

आग्नेया(य-अ)न्त[b]- -न्तम् वैगृ १, ११ : ६; -न्ते काश्रौ २४,३,३६.

आग्नेया (य-आ) श्विन-वैष्णव-सौम्य-सावित्र-धात्र-मारुत-बार्हस्पत्य-मैत्र-वारुणै (ण-ऐ) न्द्रवैश्वदेव[c]- -वाः काश्रौ २३,२,१८.

१आग्नेयै (य-ऐ )न्द्र[d]- -न्द्रः शांश्रौ ३,११,११.

२आग्नेयै (य-ऐ)न्द्र[c]- -न्द्रौ शांश्रौ ९,२४,७.

आग्नेयै(य-ऐ)न्द्र-वैश्वदेव-वैष्णव[c]- -वाः वैश्रौ १७,५:५.

आग्नेयै( य-ऐ )न्द्राग्न[c]- -ग्नयोः हिश्रौ ४,५,६४.

आग्नेयै ( य-ऐ )न्द्राग्नै (ग्न-ए) कादशिन[c]- -नाः आश्रौ ९, २, २०.

अग्ना-पवमान[c]- > आग्निपावमा-(न>)नी[f]- -नीभिः बौश्रौ ३, ८ : ३;१६;१७;२०, २० : २६; २७; ३१; माश्रौ ५, १०, ८?[g]; ६, १, १०?[g]; हिश्रौ ६, ६,१२; काठ २५, १९; -नीभ्यः बौश्रौ २०, २०:२९; -नीभ्याम् आपश्रौ ४, १६, २; ६, १९,१; बौश्रौ ३, २१:१६; वैश्रौ २, ७:५; हिश्रौ ६, ४, २६; ६, १७; -न्यः बौश्रौ २०,२०:३३.

अग्ना-पूषन्[c]- > आग्नापौष्ण[h]- -ष्णः काश्रौ १५,२,१४; -ष्णम् या ७,८.

अग्ना-मरुत्[c]- > आग्निमारुत[f]- -तम् आश्रौ ५,२०,२;७,४,१२; ७,२;४;८[2]; ८,८,४;६; ९,९,७; १०,३; ११, ४; ९,५,५; शांश्रौ ८, १४, ६; ९, १, ११; ११,६, ८; ७, १२; ८, ७; ९, ८; १८, २३,१; आपश्रौ १३, १५, १२; माश्रौ २, ५, २, २३; ५, २, ६, २१; वैश्रौ १६, १९ : १; निसू ३, १ : १८; ऋअ २, १, १९; बृदे १, १०२; -तस्य शांश्रौ ८, ६, १; ७, २०; -ताः शुप्रा ५, २२; -तात् आश्रौ ५, २, १३; शांश्रौ ९, १, ८; वैताश्रौ २०, ११; -ते आश्रौ ७, १, १४; ८, ४,१२; ९,६,२; १०,१६; १०, १०,७; शांश्रौ ८, ७, ११; १०, २,९; ३, १५; ४, १५; ५,२४; ६, १९; ८, १५; ९, १७; १०, ८; ११,९; बृदे ३, ७५; या ७, २३; -तेन वाश्रौ ३,२,४,७.

आग्निमारुती- -ती ऋअ २,८,१०३; साअ १, १७.

आग्निमारुत-काल- -ले काश्रौ २०,४,२८.

आग्निमारुत-याज्या- होम[i]- -मम् वैताश्रौ २३,८.

आग्निमारुत-सूक्त[d]- -क्तानि शांश्रौ १८,२३,१५.

आग्निमारुत-स्तोत्र-पुरस्तात् काश्रौ १८,६,१६.

अग्ना-विष्णु[f]- पाग ५, २,६१[j]; -ष्णू आश्रौ २,८,२; ४, २, २; बौश्रौ १३, ३१ : २; २१, २३ : ११; शुअ ४, १७०; -ष्णू° आश्रौ २,८,३[2]; ५, १९, ३; शांश्रौ २, ४,३[2k]; आपश्रौ २,१३,७; १७, १७, ८; १९, १३, ४[k]; बौश्रौ १, १५:१७; २,२१ : ११;१२; ३,२८:७;१०,५४ : ५;१३,१५: ५[2]; ९[2]; १६ : ६[2]; ३१ : १५[2]; १९, ५:४; भाश्रौ २, १३, ७; माश्रौ १, ३, १, १३; ५, १,१, ३३;६, ३६[2]; ३१; वाश्रौ १,१, ५, १५; ३, ४,८; २, २,४, ३; वैश्रौ १, १७ : १०[2]; ६, ३ : ५; १९,६ : ११४; हिश्रौ २,१,१९; १२,६,१;२२,३,४[2];५[2]; ५,२[2]; २३, २, ४०; वैताश्रौ ८, १[k]; कौसू ३२,३[k]; ५९, १९[k]; चाअ ४१ : २; ११[2]; अअ ७,२९; अपं २ : ६६; -ष्णवोः बौश्रौ २७, १४ : १७.

आग्नावैष्णव[f]- पा ५, २, ६१[l]; पावा ६,३, २८; -वः शांश्रौ २, ४,२; ९,२४, २; १५, १६, ३; काश्रौ ४,५,२१;७,२,२३; १५, २,१२; वाधूश्रौ ४, २२ : १४; २३ : २;२४ : १;२७ : १; वाश्रौ २,१,२,१६; हिश्रौ ११,६,२२; २२, ३, ५[2]; -वम् आपश्रौ ३, १६,५; ५,२२,६;२३,४; ७,१, ३; ८,१९,५; ९,१४,१०; १०, ४,२[2]; १८, १०, ५; बौश्रौ २, २१ : ८; ६,३ : १५; १०, १२ : १२*; १२, २:२; ४:२४; १३, १५ : १; ७; ९; १६ : ४; ३१ :

---

*a*) तस. > द्वस । वा. क्रिवि. द्र. । *b*) वस. । *c*) द्वस. । *d*) कस. । *e*) °य्यै° इति पाठः? (तु. भाष्यकृत् °य्य > य्यी-) यनि. शोधः । *f*) वैप १, परि. च द्र. । *g*) °पव° इति पाठः? यनि. शोधः । *h*) विप. । इत्वप्रतिषेधे पूष्णः डसं. (पावा ६, ३, २८) । शिष्टं वैप १,३२ f द्र. । *i*) कस. > तस. । *j*) °ष्णू इति पाका. । *k*) सकृत् पाभे. वैप १,८२९ g द्र. । *l*) आग्नाविष्णव इति पागम. ? ।

८; १७,४७ : ६; २३, २ : ११; २५, ६ : १; भाश्रौ ५, १५,१०; ७,२, १२; ९, १४, २; १०,३, ६[२]; माश्रौ १,५,६,५; १९; ८, १, २; २, १, १, १६; ५,१,६, २३; ३०; ३२; २, २, २; ६, १,३,१८; वाधूश्रौ ४,२२ : १४; १५; २३ : ३;६;२४ : ३; २६ : १४; १११ : १; वाश्रौ १, ४, ४,२८; ४२; ६, १,४; वैश्रौ १, १७ : ८; १०, १ : ७; १२, ५: २; १८, ६ : १०[२]; हिश्रौ ३, ५, १७;२२; ४, १, ५; ७,१,१७[२]; ११, ३, १[२]; १३, ३,४४; १५, ४, १८; २२,३,४[२]; वैताश्रौ ८, १; ११, ७; या ७, ८; –वस्य माश्रौ ५, १,२,४; ६,२६; ३५; वैश्रौ १,१७ : ११; –वाः वौश्रौ २४, १० : ७; वैताश्रौ ३७, ८; –वात् माश्रौ ५, १, १, ३४; वाधूश्रौ ४,२५ : २; –†वे काश्रौ १५,१, ११; –वेन आपश्रौ २०, ८, १०; वौश्रौ १७, ४७ : १०; वाधूश्रौ ४, २२ : ६; १३; २६ : २१.

आग्नावैष्णवी– -वी आश्रौ ३,१,४; शांश्रौ ५, ३, १; ६,१, २२; वैश्रौ २०, २ : १४; –वीम् आपश्रौ ७, १२, ३; १०, १६, ३; वौश्रौ २८, ७ : १; भाश्रौ १०, ७, ६; माश्रौ २, १, २, ३८; हिश्रौ १०, २, १५; –व्या शांश्रौ १४,६,६; काश्रौसं २८ : २४; वौश्रौ ८, १४ : ८; वैश्रौ १०, १ : ८; १६, १६ : ५; हिश्रौ ४,१,७.

आग्नावैष्णव-वैश्वानर[a]– -रौ काश्रौ १६,४,२८.

अग्ना-सवितृ[a]–>आग्निसावि(त्र>) त्री[b]– -त्री ऋअ २,९,६७[c]; बृदे ६,१३२.

अग्ना-सूर्य– > आग्निसौर्य– > आग्निसौरी– -री ऋअ २,८, ५६.

अग्नि-कम्पित– -तम् अप ६२,१, ९.

१अग्नि-कर्मन्[d]– -र्म या ७, ८; –र्मणा काठश्रौ १०३; या ७, २३; –र्माणि आपश्रौ ५, ७, ८.

२अग्नि-कर्मन्[e]– -र्माणः अप ५७, १,५; या १०,३०.

अग्नि-कलि– -लिभ्याम् पावा ४, २,८.

अग्नि-कल्प[d]– -ल्पः वौश्रौ २४, ६ : १०; हिश्रौ १६, १, ४; –ल्पम् वौश्रौ २२,१ : १.

अग्नि-काञ्चन–वर्चस्[f]– -र्चसः अप २,६,५.

अग्नि-कार्य– -र्यम् वैगृ ३, १ : ६; शंध ४४३; आज्यो ८, २; –र्ये आग्निगृ २, ७, १ : २; शंध १३२.

अग्निकार्य-पर– -रः शंध ३९०.

अग्निकार्य-लोप[d]– -पे आग्निगृ २, ७, ४ : ६; वौगृ ४,११, १; –पेन आग्निगृ २,७,५ : २.

अग्नि-काल[d]– -ले वागृ १४,४.

अग्नि-कुण्ड[d]– -ण्डम् वैगृ १, ८ : १३; ४, १ : ५; वैध २, १, ७; –ण्डानि वैध २, ३, ५; –ण्डे वैगृ ६, १४ : ६.

अग्नि-केतु[e]– -तुः पागृ ३,३,५†.

अग्नि-गण[d]– -णस्य चाअ ८ : २; –णानाम् चाअ २ : १८.

†अग्नि-ग(र्भ>)र्भा[e]– -र्भा आपमं १,१२,५; कौगृ १, १२,५; शांगृ १,१९,४; वौगृ १,७,३८; हिगृ १,२५,१.

अग्नि-गीत[g]– -तः नाशि १,५,१३.

अग्नि-गृह[d]– -हान् अप्राय ५,४.

अग्नि–गो-दान[h]– -नः आग्निगृ २,२, ५ : २२; आपगृ १६, १३; वौगृ ३,२ : ५७; भागृ १, १० : १३; वागृ ९,१[i]; हिगृ २,६,१८.

अग्नि-ग्रहण[j]– -णम् वौश्रौ २२, ४: ५; २३, १५ : ९;१३.

अग्नि–चतुर(र्-अश्र> )श्रा[k]– -श्राम् वौश्रौ २२,९ : १७;१८.

अग्नि-चतुर्थक[l]– -कैः अप २३, ११,१.

अग्नि-चय[d]– -यम् वौश्रौ २५, २७: १; –याः वौशु १ : १; –ये वौश्रौ २,१ : १५; २३,१९ : ३; २५,३ : २२.

अग्निचय-वत् वाश्रौ ३, ३, ४, ४२.

अग्नि-चयन[d]– -नम् हिश्रौ १५, ६, ६; वौगृ ३,१ : २३.

अग्नि-चित्[m]– पा ३,२,९१; –चित् शांश्रौ ९, २८, १८; वौश्रौ १०, ५९ : २४; २५,३२ : ३७; माश्रौ ६,२,६,२५; वाधूश्रौ ४, १०५: ४; वाश्रौ २, २, ५, १२; २२;

---

*a*) द्वस. । *b*) वैप १, ३२ d द्र. । *c*) अग्नि° इति पाठः ? यनि. शोधः । *d*) तस. । *e*) विप. । वस. । *f*) विप. । वस. । पूप. द्वस. । *g*) विप. । तृस. । *h*) विप. । अग्निकाण्डाध्ययनमेव गोदानं यस्येति वस. । *i*) सपा. मागृ १,२१, १३ अग्निर्गोदानिकः इति पाभे. । *j*) नाप. । षस. । *k*) विप. । वस. उप. द्विस. । *l*) विप. । वस. । समासान्तः कप् प्र. द्र. । पूप. = अग्नीध्- । *m*) नाप. ( आहिताग्नि- ) । उस. ।

वैश्रौ १८, १ : २; वैताश्रौ ३०, १; –चितः आपश्रौ १६, १०, ६; वैश्रौ १८,७ : २२; आग्निगृ ३,७, ३ : २९; बौपि २, ३, २; हिपि १२ : ९; –चितम् कप्र २, १०, ८; –चिताम् आग्निगृ ३, ७,४ : ६; बौपि २,३,१६.

अग्निचित्-सोमयाजि- सोमातिपूत-सोमवामिन्[a]– -मिनाम् काश्रौ १९,१,२.

अग्निचिद्-युक्त– -क्तम् मीसू ५, ३,२६.

अग्नि-चिति– > आग्निचितिक[b]– -के माश्रौ ५,२,१०,९.

आग्निचित्य[c]– त्यः बौश्रौ ९, १८ : ५.

अग्नि-चित्य,त्या[d]– -त्या आपश्रौ १४, २३, ९; वाधूश्रौ ४, ११३ : ७; पावा ३, १,१३२; –त्यायाम् शांश्रौ ८, १५, १०; आपश्रौ १८, ६, ६; माश्रौ ५, २, १५, २९; १६, २१; वाधूश्रौ ४, १०२ : १८; हिश्रौ १३,२,२०; १७, ३, ११; द्राश्रौ १४,३,१३; लाश्रौ ५, ७, १२; –त्ये वैश्रौ १७, १६ : ३.

अग्निचित्या-संयुक्त– -क्ते आश्रौ ३, ४,१२.

अग्नि-च्युति– -तेः कप्र १,८,६.

†अग्नि-ज[e]– -जाः अअ १०,४.

अग्नि-जन्मन्[f]– -न्म या ११, १७.

†अग्नि-जा[e]– -जाः आपश्रौ १५, २, १; बौश्रौ ९,२ : २६; भाश्रौ ११, २, ७; वैश्रौ १३, २ : २; हिश्रौ २३,१,१०.

†अग्नि-जिह्व[g]– -ह्वः विध १, ३; –ह्वाः आपश्रौ १४, १६, १; हिश्रौ १५, ५,१; गौपि २,३,७; अप्राय ६, १; –ह्वेभ्यः बौश्रौ ७,४ : १४.

†अग्नि-ज्येष्ठ[g]– -ष्ठेभ्यः आपश्रौ ४, २,२; भाश्रौ ४, २, ६; वैश्रौ ३, २ : १०; हिश्रौ ६,१,१९.

†अग्नि-ज्योतिस्[h]– -तिषम् आश्रौ २, ३,१५; काश्रौ ४, १४, १३; आपश्रौ ६, ९, ४; बौश्रौ ३,६ : १; वैताश्रौ ७, ९; अप ४५, १, १८.

अग्नि-तनू– -नूः आपश्रौ ५, १३, ७; भाश्रौ ५, ७, ९; वैश्रौ १, १२ : १२; हिश्रौ ३,४,२७.

अग्नि-तप्त– -प्तम् शंध ३८९; –प्तैः अप १,६,२.

अग्नि-तस्(:) अप ५४, १,५.

अग्नि-तीर्थ[i]– -र्थम् आग्निगृ २, ६, १ : ८.

अग्नि-तुण्ड[j]– -ण्डैः विध ४३, ३४;

अग्नि-त्रय– -यम् विध २१, ५; –येण हिपि २३ : ५.

अग्नि-त्रेता– -तया आग्निगृ ३, ७, ४ : २३; बौपि २,४,६; –तायाम् हिपि २३ : १०.

अग्नि-द्[k]– -दः बाध ३, १६; शंध २०१; ३२८; विध ४५, १७; –दाः शंध ४४०.

अग्नि-दक्षिणा[l]– -णाः आपश्रौ १९, १५, १३; बौश्रौ १०, १२ : १; हिश्रौ २३, ३, ३३[२]; –णाम् बौश्रौ ९,१७ : ४०.

अग्नि-दग्ध[e]– -ग्धः वैगृ ५,११ : ३; –ग्धाः आश्रौ २,१९,२२; कौगृ ३, १०,२०; शांगृ २, १४, १८; बौगृ २, ११ : ४२; गौपि २, ४, १९; अप ४४,४,३.

अग्नि-दत्त– (> आग्निदत्तेय– पा.) पाग ४, २,८०.

अग्नि-दान– -नम् कप्र ३,४,१४.

अग्नि-दीक्षणीया[m]– -याम् बौश्रौ १०, १२ : ११; १५, १२ : २; –यायाम् बौश्रौ २४,११ : ४; ३३ : १८.

अग्नि-दीक्षा– -क्षा बौश्रौ १७,२३ : १; –क्षाः बौश्रौ १५,१३ : ८.

अग्निदीक्षा(क्षा-आ)हुति– -तीः बौश्रौ १०,१२ : १६.

†अग्नि-दूत[g]– -तः हिपि १८ : ३; –ताः शांश्रौ ८,२१,१.

अग्नि-देव– > आग्निदेवि[n]– -विः बौश्रौप्र ४१ : १६.

अग्नि-देवत,ता[g]– -तः बृदे ८, १११; –ता बृदे ३,९७.

अग्नि-देवता[o]– -ताम् शुअ ४, २०२.

अग्निदेव(त्य>)त्या[p]– -त्याः अप १, ४, १; –त्याम् शुअ २, ३७.

---

*a*) द्वस. । *b*) नाप. (ग्रन्थ-विशेष-) । ठन् प्र. (पा ४,३,६८) । *c*) विप. । प्राग्दीव्यतीयः ण्यः प्र. उसं. (पा ४,१,८५) । यद्वा अग्नि-चित्या– + तस्येदमीयः अण् प्र । *d*) भाप. । तस. । *e*) वैप १, परि. च द्र. । *f*) तस. । *g*) विप. । वस. । *h*) वैप १ द्र. । *i*) नाप. (हस्त-मध्यभाग-) । *j*) नाप. । अर्थः? । वस. । *k*) नाप. (आततायि-विशेष-) । उस. । उप. < √दा (दाने) । *l*) नाप. । तस. । उप. = दीयमान-वस्तु- इति । *m*) नाप. । तस. । *n*) व्यप. (ऋषि-विशेष-) > अपत्ये इञ् प्र. (पा ४,१, ९५) । *o*) कस. । *p*) विप. । ताद्धितः यत् प्र. ।

अग्नि-देव-ब्राह्मण-संनिधि[a]- -धौ विध ७१,६०.
अग्नि-दैवत्य, त्या- -त्यः विध ८९, १; -त्यम् आग्निगृ २, ४, १२ : १; वैगृ ६, १९ : ४; बृदे २, १४५; -त्याः वैगृ २,२ : ४.
अग्नि-धन्वन्तरि[b]- -री मागृ १,१८, ८; वागृ ३, १२; जैगृ १, २४ : १; कागृ ३६,१४.
अग्नि-धमन- -नम् कप्र १,९,१४.
अग्नि-धर्म- -र्मः मीसू ९,१,२६.
†अग्नि-धान[c]- -ने मागृ २, १७,१; बृदे ८,६८.
अग्नि-धिष्णिय- -यान् वौश्रौ १०, ५५ : २; -यानाम् वौश्रौ २२, ११ : १.
अग्नि-नक्षत्र[d]- -त्रम् अप १,९,५.
अग्नि-नित्य-धारिन्[e]- -री काश्रौ ४, १०,१६.
अग्नि-निधान[f]- -नम् वौगृ ३, ५:६; -नात् काश्रौ ६,२,२; १७,७,५.
अग्नि-निवेशन[g]- -नम् अप ३३, ४,३.
†अग्नि-नेत्र[c]- -त्राः वौश्रौ १२, ४ : ४; भागृ २, ६ : ४; वौध ३, ६,१३; -त्रेभ्यः काश्रौ १५, १,१८; शुअ १,५८९.
†अग्नि-न्य(क्त>)क्ता[h]- -क्ताः आपश्रौ ५, २८, १३; वैश्रौ १, २० : १०.
अग्नि-पति- -तये आपश्रौ ६,१,८[2].
अग्नि-पद[j]- पाग ५,१,९७; -दम् वौश्रौ २०, १७, ९; द्राश्रौ[j] १२, ४, १०; १४; लाश्रौ ४,१२,८; ९; वैताश्रौ ५,११; ६,६.
आग्निपद- पाग ५, १,९७.
अग्निपदा( द-आ )दि- -दिभ्यः पावा ५,१,९७.
अग्नि-पर- -रः तैप्रा ११,१५.
अग्नि-परिचर[k]- -रः वौश्रौ २६, ५ : ४.
अग्नि-परिचरण[l]- -णम् वैध १, ५, ४; ५.
अग्नि परिचर्या[l]- -र्यया शंध ४१; -र्या वौगृ १,७,१०.
अग्नि-परिमाण[l]- -णम् वाश्रौ ३, २,१,२२.
अग्नि-परिस्तरण[l]- -णम् वैश्रौ ३, ९:११; हिश्रौ १,४,१६; वैताश्रौ ७, ४.
अग्निपरिस्तरणा(ण-आ)दि- -दि वैश्रौ १६,२३ : ४.
?अग्निपशुकेतन[m]- -नानि आश्रौ ३,६,२३.
अग्नि-पितृ-मातृ-सुत-दार[b]- -राणाम् विध ३७, ६.
अग्नि-पीत[n]- -तस्य आपश्रौ १३, १४,१४; वैश्रौ १६,१८ : ६.
अग्नि-पुच्छ[o]- -च्छस्य आश्रौ ४, ८,२५; १०, १०; माश्रौ ६, २, ५,३०.
अग्नि-पुत्र[o]- -०त्र कागृ ४१,१७†; -त्राणाम् अप ५५,३,३; -त्रान् अप ५५,३,१; -त्राय अप २०, ६,५†.
अग्नि-पुरः सर[p]- -रम् कप्र ३,२,६.
अग्नि-पुरोगम[p]- -मान् अत्र १,९.
अग्नि-पूजा[l]- -जा आपध १,४,१७; २, २५, ७; हिध १, १, १३६; २,५,१८५.
अग्नि-प्रकम्पित[n]- -तम् अप ६२, १, ५.
अग्नि-प्रचरण[l]- -णम् पागृ २, ५, ११.
अग्नि-प्रजापति[b]- -ती वाधूश्रौ ४, १०९ : १.
अग्नि-प्रणयन[l]- -नम् आश्रौ ३, १, ७; ४, ८, २९; १२, ४, १३; शांश्रौ ५,१२,१; ५; वौश्रौ १९, ५ : ३२; १० : ५८; माश्रौ ६, २,५,४; वाश्रौ १,७,२, ५; वैश्रौ १४,४ : २०; हिश्रौ ५,२, १७; कप्र ३,९, ७; -नात् वौश्रौ १९, ५ : २; वैश्रौ १३, १८ : ३; -नानि माश्रौ १,५,३,१९;४,७; १२; ७,३,३३; ३९; ४१; २,२, ४,१५; २१; वाश्रौ १,४, ३, ८; हिश्रौ ३,४,१३; ४,२,१; ७,८, १९; -ने आश्रौ ३,१३,३; हिश्रौ ५,२,८; -नेषु द्राश्रौ १३, १,७; लाश्रौ ५,१,७.
अग्निप्रणयन-काल- -ले माश्रौ ५,१,३,१२.
अग्निप्रणयन-प्रभृति- -ति माश्रौ ५, १,४,९.
अग्निप्रणयन-मन्त्र[l]- -न्त्रैः अप ३७, ११,१.
अग्निप्रणयना( न-आ )दि- -दयः शांश्रौ ६, १, २१; -दि आश्रौ

*a*) द्वस. > तस. । *b*) द्वस. । *c*) वैप १, परि. च द्र. । *d*) =कृत्तिका- । मध्यमपदलोपी कस. । *e*) 'नित्यम् अग्निं धारयति' इति मयूरव्यंसकादिसमासः । *f*) तस. । उप. भावे अधिकरणे च ल्युट् प्र. । *g*) उप. भावे ल्युट् प्र. । *h*) विप. (ऋच्-) । बस. उप. भाप. [=अ-व्यक्ति-] < न्य(नि √अ)ञ्ज् । *i*) नाप. (अश्व-) । बस. । *j*) आ° इति भाष्यकारः? । *k*) नाप. । उस. उप. ट-विधौ परि-पूर्वत्वम् उसं. (पा ३,२,१७) । *l*) षस. । उप. भाप. । *m*) समासैः अर्थश्च? । *n*) विप. । तृस. । *o*) तस. । *p*) विप. । बस. ।

१२,४,१०; आपश्रौ १९, १३, १; हिश्रौ २३,२,३८.
अग्निप्रणयनादि-तु(ल्य>)-ल्या[a]- -ल्याम् काश्रौसं २८:३.
अग्निप्रणयनीय,या- -यम् वैश्रौ १४, १५:४; -याः आश्रौ २, १७, २; शांश्रौ ३, १४, १३; -यान् वैश्रौ १, १२:१; १०, ५:४; १४, १५:३; -यायाः आश्रौ४,१,२६;माश्रौ५,२,८,२.
अग्नि-प्रणाम[b]- -मम् वैगृ ३,३:१२.
अग्नि-प्रतिष्ठापना (न-आ) दि[c]- -दि आग्निगृ १,६,३:५८.
अग्नि-प्रतिष्ठापना(न-अ)न्त[c]- -न्तम् अप ३०,१,१४.
†अग्नि-प्रथम[d]- -माः आपश्रौ ११, १७, ३; बौश्रौ ६, ३०:२२; १०,२७:१३; वैश्रौ १४, १५:७; हिश्रौ ७, ८:२०.
अग्नि-प्रदान-मन्त्र[b]- -न्त्रः कप्र ३, ४, ७.
अग्नि-प्रवेश[b]- -शात् वाध २९,४.
अग्नि-प्रहरण- -णम् वाधूश्रौ ४, ३२:१०.
अग्निप्रहरणा(ण-अ)न्त[d]- -न्तम् वैश्रौ १०,१०:७.
अग्नि-प्राप्त[e]- -प्तम् काश्रौ २२, ६, १७; -प्ते काश्रौ १८,५,१.
अग्नि-प्लुष्ट[b]- -ष्टे विध ७०,११.
अग्नि-बलि[e]- -लिम् आग्निगृ २,६, ५:८.
अग्नि-बीज[f]- -जेन आग्निगृ २, ५, ६:१९.
अग्नि-ब्राह्मण-गणिका-पूर्णकुम्भा-(म्भ-आ)दर्श-च्छत्र-ध्वज-पताका-श्रीवृक्ष-वर्धमान-नन्द्यावर्त[g]- -र्तान् विध ६३,२९.
अग्नि-भक्ति[d]- -क्तीनि या ७,८.
अग्निभक्ति-स्तुत- -तान् बृदे १,७७.
अग्नि-भय[h]- -यम् गोगृ ४, ७,२१; अप १९,१,८; ७०[2],२०,५;२१, ४; -ये अशां १७,१.
अग्नि-भाण्ड- -ण्डम् हिपि १२,९.
अग्नि-भूत- -तः बृदे १,६७; -तम् बृदे १,६४.
अग्नि-भूतपती(ति-इ)न्द्र[g]- -न्द्रान् अअ २,१४.
अग्नि-मत्- -मती शांश्रौ१४,२९,८; -मते शांश्रौ३,४,१;काश्रौ२५,२, १३; माश्रौ ३,३,४;५,१,२,१३; अप्राय २,७; ५,४[2]; अप २२,९, ४; -मान् कप्र १,६,१; २, १०, १३; ३, २,१६; ४,४;५,१२.
अग्निमती- -त्याम् वैश्रौ १४, ५:१.
अग्नि-मन्थ[i]- -न्थेन माश्रौ ४,१,२२
१अग्नि-मन्थन[i]- -नम् आश्रौ ३,१, १२; ४,५,२; काश्रौ ४, ८,१९; ५,१,२१;८,१,१२; वाश्रौ ३,२, १, २२; अप २२, १०, १; -ने आश्रौ २,१४,१६.
अग्निमन्थन-पूर्व (?र्विक[j])का- -काम् अप ६८, ५,२८.
अग्निमन्थन-प्रभृति- -ति माश्रौ ५,१,३,१७.
अग्निमन्थना(न-आ)दि- -दि काश्रौ २०,६,१.
अग्निमन्थनादि-समा (न>)-ना[a]- -ना आश्रौ २,१७,१३.
अग्निमन्थनीय,या- -या निसू ३,९:१५; -याः आश्रौ २,१६, १; शांश्रौ ३,१३, १५; १७; ५, ७,५; १५, ४; बौश्रौ २६,१३: १४; माश्रौ ५,२,८,२; -यानाम् शांश्रौ १४,५१,१२.
२अग्नि-मन्थन[k]- -नौ या ३, १४.
†अग्नि-मारुत[g]- -तयोः माशि १, ४; याशि १, ५१.
अग्नि-मृद्न्ध- पावा ६,३,७०.
अग्निम्-ईंयाम[l]- -मस्य लाश्रौ ६, ११,३.
१अग्नि-मुख[b]- -खम् वैगृ १, १५: ७; बौगृ १,३,२२; -खात् बौश्रौ १८, ३:५; आग्निगृ २, २, १: ३; २:२;४,३:६;५:७; ६: १५; ५,२:७;३:११; ४:४; ६:१७; ७:६; ८:१०; ९: ५; १०:१७; ७, ३:१२; ३, ९, ३:२; १०, ३:२०; ११, ४:६; बौगृ १, ५, २४; ६, ८; ९-१०,३; ११,५; २,१,१३; २-४, ३; ५, ९; ६, ७; ७, १६; ११, २५; ३, १, ४; २,५; १७; ३०; ४२; ३,६; ५,९; ६,२; ७, १२; ४,३,२; ४, १; ३; १२,३; बौपि २, ७, २; बौध २, ८, ७; ३,४,३;७,११; ८,८; -खे बौगृ २,११, ४८; वैगृ ३, २:५.
अग्निमुखा(ख-अ)न्त- -न्तम् आग्निगृ २,५,१:२२.
२अग्नि-मुख,खा[m]- -खाः बौश्रौ

*a*) तृस. यद्वा वस.। *b*) तस.। *c*) वस. पूप. षस.। *d*) विप.। वस.। *e*) नाप.। चस.। *f*) नाप.। पस.। *g*) द्वस.। *h*) पंस.। *i*) नाप.। अर्थः?। उस. उप. √मन्थ्+करणे घञ् प्र.। *j*) पाप्र. पाठः? यनि. शोधः। *k*) विप.। उस. उप. कर्तरि ल्युः। *l*) नाप. (साम-विशेष-)। पूप. द्वि१ द्र.। उप.?। *m*) विप. (देव-, देवता- प्रभृ.)। वस.।

२५,२५ : ११; वाश्रौ १, ६,४, ३१; वाधूश्रौ ३,१९ : २;४३ : ३; आगृ ४,७,२२.
अग्निमुखोपधमन-विगृह्यवाद-बहिर्-गन्धमाल्यधारण-पापीयसावले-खन-भार्यासहभोजना(न-अ)-अन्त्यवेक्षण-कुद्वारप्रवेश-पादपा-दधावना(न-आ)सन्दीस्थभोज-न-नदीबाहुतरण-वृक्षविषमारो-हण-प्राणव्यायच्छन[a]- -नानि गौध ९,३३.
अग्नि-मेध[b]- -धेन वाधूश्रौ ४,१९ : ३१.
अग्नि-मेधा-जननी[c]- -नी नाशि २,८,६.
अग्निंब्रूमक[d]- -के अपं ४ : ३२.
अग्नि-या(ज्या>)ज्य- -ज्ये तैप्रा ३,९.
अग्नि-युक्त- -क्तान् हिश्रौ १४,६,८.
अग्नि-युत[e]- -तः ऋअ२,१०,११६.
अग्नि-यूप[e]- -पः ऋअ २,१०,११६.
अग्नि-योग- -गम् माश्रौ ६, २,६, ९; वैश्रौ १९,७ : २.
१अग्नि-योजन[f]- -नः वौश्रौ २०, २३ : ४४.
२अग्नि-योजन[b]- -नम् काश्रौ १८, ६,१५.
अग्नि-योनि- -नयः कप्र १,६,१.
†अग्नि-राजन्[g]- -जानः शांश्रौ ४, २१,८; कागृ २४,१२.
अग्नि-राशि-वत् सु १८,२.
१अग्नि-रूप[b]- -पम् अप ६७,४,४; -पाणि आपश्रौ १७, ५, ११; वैश्रौ१९,५:२४; हिश्रौ१२,२,८.
२†अग्नि-रूप[h]- -पाः या १०,३०.
†अग्नि-रेतस्[g]- -तसौ आपश्रौ ५, ८,८; वौश्रौ २,१५ : १२; माश्रौ १, ५,२,४; वाश्रौ १, ४,१,१९; वैश्रौ १,८ : ४; हिश्रौ ६,५,१०.
अग्नि-वत् काश्रौ २२, १, ४५; आग्निगृ ३,८,२ : १८; वौपि १, १५ : २७; काध २८० : ५; मीसू ९,२,९; ५५; १०,५, ७८; ११, ३,२४;२५.
अग्नि-वत्- -वति आपश्रौ ११, ५, ११; वौश्रौ ४,३ : २९; ५, ५ : २९; १० : ३६; ६, २४ : १०; १०, ९ : ९; २२ : १६; १७,३३ : ६;२१,१४ : ६; वैश्रौ ८,१० : ११; हिश्रौ ७,४, ५६; -वते आश्रौ ३, १२,३; आपश्रौ ९,१०,११; वौश्रौ १३,७ : १०; भाश्रौ ९, १४, ३; वैश्रौ २०, १८ : ६; हिश्रौ १५, ३, २१; भागृ १, १८ : ११; -वान् या ६,११†.
अग्निवती- -त्यै वाधूश्रौ ४,४४ : २†.
अग्नि-वरुण- -णौ काठश्रौ ३६.
अग्नि-वरुण-सोम[i]- -मानाम्[j] ऋअ २,१०,१२४.
१अग्नि-वर्ण[k]- -र्णः वौध १;४, ४; -र्णान् अप २४,२,२; -र्णानाम् अप २४,१,१.
२अग्नि-वर्ण,र्णा[g]- -र्णः अप ५३,५, २; -र्णम् अप १, ६, ३; शंध २६६; विध ११,५; -र्णाः अप ५८, १, ९; -र्णाम् वाध २०, २२.
अग्नि-वाक्य[c]- -क्यम् ऋअ २,१०, ५१.
अग्नि-वायु-विवस्वत्[i]- -स्वताम् वृदे ४,३७.
अग्नि-वायु-सूर्य-हृदय-भू(त>)ता- -ताः शुअ २,२६५.
अग्नि-वायु-सूर्यो(र्य)-देवत[l]->°व(त्य>)त्या[m]- -त्याः शुअ १,१६९; २,४१४.
†अग्नि-वासस्[h]- -साः कौसू १३७,३०; अअ १२,१; अपं ३ : २०.
अग्नि-वाहु[n]- -वाहौ आपश्रौ १८, १९,३.
अग्नि-विकार[k]- -रः मीसू ११,२, २८.
अग्नि-विक्रय[k]- -यम् अअ ३,१५.
?अग्नि-विच्छेद[o]- -दः गौपि १, १, २९.
अग्नि-विद्[n]- -विदः आपश्रौ १६, १०,६; वैश्रौ १८,७.
अग्नि-विद्युत्-स्तनयित्नु-वर्षा-महा-भ्र-प्रादुर्भाव[c]- -वात् शांगृ ६, १,१२.
अग्नि-विनाश[k]- -शः वौश्रौ २९, १२ : ९-१६.
अग्नि-विपराणयन->°नी(य>)-या- -याम् माश्रौ १, ५,४,२०.
अग्नि-विमोक[g]- -कम् माश्रौ ६,२, ६,२०.

*a*) द्वस. । *b*) तस. । *c*) द्वस.>तस. । *d*) अग्निं ब्रूमः इत्यतः मत्वर्थीयः वुन् प्र. उसं. (पा ५, २,६२)। *e*) व्यप. (ऋषि-विशेष-)। *f*) विप. । उस. उप. कर्तरि कृत्। *g*) विप. । वस. । *h*) वैप १, परि. च द्र. । *i*) द्वस. । *j*) °ग्नी° (तु. वैप १,३७h)<>°ग्नि° (=यनि.) इति मौस्थि. वैप १, भू CVI, टि. २ इत्यस्य-गोचरः द्र.। *k*) षस.। *l*) द्वस.>कस. *m*) विप. । यत् प्र. । *n*) विप. । उस. । *o*) षस. । अग्निर्वि° इति पाटः? यनि. शोधः।

अग्नि-विमोचन- > °नी( य> )
या[a]- -यास् हिश्रौ १२,७,७.
अग्नि-वेला[b]- -लायाम् आगृ ४,६, ५; गो १,७.
अग्नि-वेश[c]- पाग ४, १, १०५; -शाः[d] अप ५७,१,५.
आग्निवेश्य[e]- पा ४, १, १०५; -श्यः बौश्रौ १८, २६ : १३; आग्निगृ २,४,२:९;३:१९; ५: २७; ६: ४४; १०: ४०; ११: २६;५,६: ३३; ७,५:१६; ६: ३७; ८: २६; ११: १९; ३, १२,२: १३; अप १,३,१; शुअ ४, १७७; -श्याः बौश्रौ १८,२६: २० बौश्रौप्र १७:४; -श्याय बौगृ ३,९,६.
अ(?आ)ग्निवेश्य-काश्य-प-गौतमा(म-आ)ङ्गिरस-भार्गव-कौशिक-वाशिष्ठ[f]- -ष्ठानि पिं ३, ६६.
आग्निवेश्य-वाल्मीकि[f]- -क्योः तैप्रा ९, ४.
आग्निवेश्यायन[e]- -नस्य तैप्रा १४,३२.
अग्निवेश-दशेरुक[f]- -काः[g] पा २,४,६८.
अग्नि-वैकृत[h]- -तम् अप ७०[२], १९,५.
अग्नि-व्रत[b]- -तम् शंध १०५; विध ५६,२७.
आग्निव्र( त> )ती-
आग्निव्रता(त-आ)श्वमेधि(क> )की[j]- -की वागृ ७,४.
अग्नि-शब्द[i]- -ब्दः शांश्रौ २, ५, १०; -ब्दम् शांश्रौ २, ५, २०; १४, ५१,८; -ब्दे काश्रौ ४, १५,८.
अग्नि-शरण[k]- -णे कौसू १२०,१.
अग्नि-शर्मन्[c]- पाग ४, १, ९६; ९९;२,१३८.
अग्निशर्मीय- पा ४, २,१३८.
आग्निशर्मायण- पा ४,१,९९; -णाः बौश्रौप्र ४१ : ९.
आग्निशर्मि- पा ४,१,९६.
अग्नि-शस्त्र-भय[l]- -यम् अप ५८, १,९.
अग्नि-शाला[k]- -लाम् वैश्रौ १, २ : २; वैगृ ३,३ : २; -लायाम् वैगृ १, ८ : १०; ४,११ : १२.
अग्नि-शिखा-मध्य[b]- -ध्ये वैश्रौ २, ६ : ९.
अग्नि-शुश्रूषक[m]- -कः कप्र ३, ७, १६.
अग्नि-शुश्रूषु[m]- -षुः विध २८,४६.
अग्नि-श्री[c]- -श्रियः आपश्रौ २२, २७, ९; बौश्रौ १८, १२ : ७; हिश्रौ २३,४,३७.
अग्नि-श्रोणि[b]- -णिम् काश्रौ १७, २,१०.
अग्नि-(स>)षद्[a]- -षदे भागृ २, ३१,९;१०.
अग्नि-(स्तु>)ष्टुत्[c]- पा ८,३,८२; -ष्टुत् आश्रौ ११, २,१०; १२; शांश्रौ १६, १५, ३; २९, १५; काश्रौ २१, २, ४; २२, ४, ३१; २४, १, २९; आपश्रौ २०, २५, ६; २२, ७, ३; २३, २, ६; ८; बौश्रौ १६, ३१ : १६; १८,१२ : १२; हिश्रौ १४, ६, १६; १७, ८, ३३; २३, ४, ३६; क्षुसू ३, १४ : १;४; निसू ९, ३ : २०; वैताश्रौ ३८, ११; गौध २२,९; -ष्टुतः शांश्रौ १४, ४,६; -ष्टुतम् बौश्रौ १६, ३५ : ४; निसू ९,३ : १९; १० : ३८; -ष्टुता आश्रौ ९,७,२२; शांश्रौ १४, ५१, १; ५७,२०; आपश्रौ २२, ६,५;१४;१०,२;४; बौश्रौ १८,१२ : १; हिश्रौ १७,२,५०; ५८[२]; ५९; ४, १८; २०; वाध २२,७; बौध २, १, ४; ३,१०, ९†; गौध १९, ११; -ष्टुति बौश्रौ २३,१८ : १६; २६, ३१ : १७; निसू ६,३ : २२; ७, १० : ६; शुअ ३, १५८; -ष्टुत्सु काश्रौ १२,१,३; द्राश्रौ १,४,३; निसू ६,१३ : १;३८; लाश्रौ १, ४,१; ८,७,१; वैताश्रौ ३९,८.
अग्निष्टुद्-इन्द्रस्तुत्-सूर्यस्तुद्-वैश्वदेवस्तुत्[f]- -स्तुताम् काश्रौ २४,७,१५.
अग्नि-(स्तो>)ष्टोम[c]- पा ८,३,८२; -मः आश्रौ ५,२०, ८[२]; ६,१०, २२; ११,१; ७, ४, १४; ८,४, २०;१२, २६; ९,२,१२;२२;३, २६;२७;११,५,३; शांश्रौ ७,२१, ७; ९,१,१; १०,२,१; ११, ४, ४; १०,१;१३,१; १५,१; १३, १४,७; १६,५; १४, २, ७; ८; ८,२; १२,४; ४०,५; ५७,१९; १५,४,८; ११,७; १२,४; १६, ५; १६,२०,१३; २१, ७; २६,

---

*a*) विप. । *b*) षस. । *c*) वैप १, परि. च द्र. । *d*) बहु. < आग्निवेश्य- । *e*) व्यप. । *f*) द्वस. । *g*) बहु.<आग्निवेश्यदाशेरुकि- । °सेर° इति पाका. पाभे. । *h*) षस. । उप. स्वार्थे<वि-कृति- । *i*) विप. (तु. मागृ १, २३, ५; १४) । *j*) कस. । *k*) षस. । उप.=गृह- । *l*) द्वस.>पंस. । *m*) उस. उप.<√श्रु ।

५; २८, ४; २९, १७; १७, ७,
५; १८, २३, १७; काश्रौ ७,१,
५; १२,३,१; १३,२,२; ७; ९;
१६;२१;४,८; २०,४,२२; २२,
१,२; २४,६,२६; आपश्रौ १०,
२,३; १२,६,७†; ८; १३,२५,
१०[२]; १४,१९,८; २२,४; १४;
२४, १६; १८,८,३; २२, १३;
१८; १९,१२,१४†; २०, २४,
५; २५, ६; २२, १,२; ४;६[२];
१२;२,५[३]; ४,२८; ५, ४; ८,२;
९;१३;९,२;१४,१९; २१; २३;
१५, ४; १८, १; १४; २०, ७;
१५; २१,१४; २२,७; २३,१२;
१८[६]; २४,२[६]; ११; २४,१,७;
४, ३; ७; काश्रौसं २८:१५;
१९;२१;२३;२५; वौश्रौ ७,४:
२; ८, २२:१४; १५; १२,१:
४; १८:२८; २०:२५; १४,
४:२५; २९:२४; १५, १८:
२३; १६, ३:१७; ६:१९;
१४:६; ७; १७; १५:१; २;
२४:५; २५:१; २८:३; ८;
२०; २९:३; ४; ९; ३१:२;
४; ७; ९; १६; १७[२]; १८;३२:
१०[२]; ३३:७; १७,१७:११;
५५:१३; ५८:१०; ५९:३;
१८, १:८; ३:१२; ४:१२;
११:१६; ३६:११; १९, ३:
३६†;२४,४:८; २६,२:२२;
३:१२; १६:१५[२]; ३३:१;
माश्रौ ३, ७, ८; ६, २, ६, ७;
वाधूश्रौ ४, ९९:२;१००:११;
१०१:१[२]; २[२]; ७[२]; ८; वाश्रौ
३,२,३,५;७[२]; १८; ३, ४, १५;
४९; ४,२,१; वैश्रौ १२, १:९;

२:८†; १५,८:३; १६,२८:
१५; २०, १:३; २१,५:११;
९:३; हिश्रौ ७, १, १; ९,६,
३४; ११, १, २?[a]; १३, ७, ९;
३२; ३४; १४, २, ४२; ६,३[२];
१७; १५,५,२०; ४०; ६, १८;
१६,३,११;४,३;५,१८[२]†;२८;
६, ३†; ४; १७, १,१; ५; ८[२];
१५; २३[३]; २, १४; ३२?[b]; ३,
१८?[c]; २६; ३१; ३२; ३४; ६,
७; १६; १८; २१; ७,७; १६[२];
१९; २८[२]; ३०; ८, १५; १६;
२४[२]; २५; ३३[६]; ३४[६]; ३६;
१८, १, २०; ४, २०; २३, २,
२५†; द्राश्रौ १३, ४, १७;
लाश्रौ ५,४, २४; ८, १२, ११;
वैताश्रौ १६, ५; २४, १९; निसू
३,१:६; १२;२:१८;३:१२;
७,८:९; ८,४:२५;१०:२५;
९, ७:४; ८; १०, १३:२१;
वैगृ १, १:९; गौध ८, १८;
शुअ १, २३०; मीसू ५,३, ३७;
–मम् आश्रौ १०, ५, १०[२];
शांश्रौ १५,५,१; आपश्रौ ६,४,
१०; १३,१५,६; २१, ६, १०;
९,१; १५,१०[२]; १४; १६;२१;
१६, १६; १७; १७, १; काश्रौ
२२, ७, ७; ९; वौश्रौ १२,१८:
१; १४, २०:८; १५, १७:
१९; १६, ६:४; १४:१३;
२०:८;३५:२;१८,२१:११;
२१,७:१; भाश्रौ ६, ९, ८;
वाधूश्रौ ३,१९:२४; ४,११३:
७; वाश्रौ ३, २, १, ४२; ५,१;
वैश्रौ १२, १:१; २:७; १६,
१८:१२; हिश्रौ १०,५, १३;

१८,४,६३; द्राश्रौ ८, ४, १०;
लाश्रौ ४,८, १०; निसू ३,१:
९;१६;९,९: ५१; अप्राय ३,
३; भाशि १२४; –मस्य आपश्रौ
१४,१,१; काठश्रौ ७२; वौश्रौ
२४,४:९; वाधूश्रौ ४,८१:८;
१०१:५; १३;११३:५; वाश्रौ
३,२,३,३; हिश्रौ ९, ७,१; १०,
१,१; १७,३,१६; वैताश्रौ १५,
६; निसू ३, २:४; ९,६:२४;
–मा: आश्रौ ८, ७, १२; ११,
५,७; शांश्रौ ११, ११, ५; १३,
२३, ६; १५,१,७; १६,२९,३;
काश्रौ १३, २, ८; २३, ५,२३;
२४,३,२१; ४,७; आपश्रौ २१,
१४, १४; २२, ५, १७; ७, १;
२४,७; २३,७, ३; ९, ६; वौश्रौ
१६, १६:४; ५; २८:२; ७;
१९; ३६:४; १७; २१; १७,
१६:१२; २६,१६:१५; १७:
९; २०:७; ३०:१; वाश्रौ ३,
२, ३, ११; हिश्रौ १६, ५, २५;
१७,२, ४५; ८,३५; १८, ३,१;
११; ४,६७; लाश्रौ १०,१४,१;
वैताश्रौ ३१, १५; क्षुसू २,१५:
४; –मात् वाधूश्रौ ४, १००:
१३; –मान् आपश्रौ २१, १५,
१४;२०; वौश्रौ २६, १७:१०;
निसू ५,७:२; वाधूश्रौ ४,१३:
४?[d]; –माय काठश्रौ ४४; वौश्रौ
१२, २०:२४; २६, २:२१;
–मे आश्रौ ५, ३,३; ७, १,१७;
शांश्रौ ११, २, १; १४, ४१,५;
काश्रौ ९, ३, १३; ८,२; आपश्रौ
११, १०,१३; १२,१५,९; १८,
१४;१४,२,१०;१०,४;१५,१२,

*a*) अग्निशिलस्तोमः इति पाठः? यनि. शोधः?। *b*) पाठः? °माः इति शोधः (तु. सपा. आपश्रौ २२,५,१७)। *c*) पाठः? °माः इति शोधः (तु. सपा. आपश्रौ २२,७,१)। *d*) पाठः? संस्करणान्तर-सापेक्षः द्र.।

१०; २२,६,२१; काठश्रौ १६६; काश्रौसं २९ : ११; बौश्रौ १४, ११ : २८;२२ : २३; २४, १० : १८; भाश्रौ ११,१२,११; माश्रौ २,२,३,२४; ३,१,१९; २, २६; ६,१५; ५,१, १७; २,१७; २३; वाश्रौ १, १, १, ६४; वैश्रौ १३, १५ : ३; १५, १ : १; १७ : ४; १७, ६ : ८; २१, ४ : ८; हिश्रौ १०,८,४७; १५, ५, १३; १६, ८,१४; १७,२,६५; २४, ५, ८; निसू ९, ८ : ३; —मेन आश्रौ १,३, २२; ६, १०, २४; ९, ३, २; शांश्रौ १५, १६, ९; काश्रौ २४,५,३; ६,४१; आपश्रौ २१, १३,५; २२,१,१६; ६, २[a]; ५; १४; ९, ८; ११; १९; १०, २; ४; १२, ११; बौश्रौ ६, १ : १; ११, १३ : ३७; १६, ९ : १६; २३ : १३; १८, २ : ७; १३ : ३; १६;४१ : १८;४७ : ४; १०; २५; २६; ५१ : २४; २५, ४ : १; २६, १८ : २; ११; भाश्रौ १०,२,१२; माश्रौ २,१, १, १; वाश्रौ ३,३,१, २; ४, ५०; वैश्रौ १६, २८ : १६; १७, १८ : ९; हिश्रौ ९,७,३; १३,३, ४; १६, ५,१२; १७,१,१८; २,१३;५०; ५९; ३,१; ४, ४; ६; १४; १८; २०; ५,१९; ३०; वैताश्रौ ३४, २१; निसू ३, ६ : ११; ६, १ : २१; अअ ९, ६, ४†; शौच २, ९६†; —मेषु निसू ६, २ : २४; ९,४ : ३०; —मैः बौश्रौ १७, १९ : ११; —मौ आश्रौ ७, ७, १०; ८,४, ७; शांश्रौ १४, ४२, १८; काश्रौ १३,२, १; २१, १, ३; २४, २, १८; २१; आपश्रौ २२,५,२; ६, ३; ८, ९; २३,८, ३; बौश्रौ १६, ३१ : १९; २६, १६ : ७;१६; हिश्रौ १७,२,३०; १८,३,३; लाश्रौ १०,३, २; ६; १८,५; क्षुसू २,१५ : १९; शौच २,९६†.

आग्निष्टोमिक[b]- -कम् शांश्रौ १६,२०, १२; आपश्रौ १४, २, १; बौश्रौ २५, ९ : १३; १७ : १६; २६, ३२ : ४; ३३ : २१; —काः बौश्रौ १०,४२ : ९; ११, १ : १२; २४,३५ : ६; २६,१ : ३; —कान् बौश्रौ १७, ५५ : २; —कानि बौश्रौ २६, २ : ११; —के शुअ ३,१५८.

आग्निष्टो(म>)मी[c]- -मीम् निसा ३,१ : २; १०,१३ : १९.

आग्निष्टोम्य[d]- -म्यम् लाश्रौ ८, १, १६; निसू ४, ५ : ६; —म्यात् निसू ७, ४ : १०.

अग्निष्टोम-क(ल्प>)ल्पा[e]- -ल्पाः वैश्रौ १७, १ : १.

अग्निष्टोम-चमस- -साः माश्रौ २, ५, २, १७; —सान् आपश्रौ १४,१,६; काश्रौसं ३०:६; माश्रौ ६,२, ६, १७; हिश्रौ ९, ७, ८; —सानाम् हिश्रौ ९, ७, १०; —सेभ्यः माश्रौ ६, २, ६, १६; —सैः आपश्रौ १४, १, ८; हिश्रौ ९,७,११.

अग्निष्टोम-चमस-गण- -णात् वैश्रौ १७,१ : ४.

अग्निष्टोम-पक्ष[e]- -क्षः काश्रौ २३, ५,२०;२८.

अग्निष्टोम-भक्ति[f]- -क्तिः निसू ६,२ : २५.

अग्निष्टोम-मुख[e]- -खः आपश्रौ २३, ८, ३; हिश्रौ १८, ३, ३; —खानि आपश्रौ २२, २३, ६; हिश्रौ १७,८,२४.

अग्निष्टोम-याजिन्- -जी निसू २,१० : ६; ३,१ : २५.

अग्निष्टोम-वत् आपश्रौ १४, १ : ३; मीसू ८, ३,१३.

अग्निष्टोम-विष्टुति[f]- -तौ जैश्रौका १९५.

अग्निष्टोम-सं(स्था>)स्थ[e]- -स्थम् शांश्रौ १३,२१, ९; द्राश्रौ ८, १, ११; लाश्रौ ४, ५, ११; निसू ८,१२ : ६; —स्थे निसू ४, ११ : १८.

अग्निष्टोम-संधि-षा(<सा)-मन्[g]- -म्नोः द्राश्रौ ६,१, २१.

अग्निष्टोम-संमित- -तः वाधूश्रौ ४, ६५[२] : ४; ७४ : २०; —तम् वाधूश्रौ ४,२९[२] : ९;१०; ७४ : २१; आपध २, ७, ४; हिध २, २, ५.

अग्निष्टोम-सहस्र- -स्रम् आश्रौ १२,५,२१.

अग्निष्टोम-साम[h]- -मम् आपश्रौ १८,२०, २२; बौश्रौ १२, १८ : १९; हिश्रौ १३,७,१०.

अग्निष्टोम-सामन्[i]- -म आश्रौ ८, ७,११;१२, २६; १०,२, ७; शांश्रौ १०,१२, २; १४,३३,६; ६१, ७; १५, ३,३; ६, ४; १६,

---

a) सपा. अग्निष्टोमेन<>उक्थेन इति पामे. । b) विप.। तात्रभविकः ठञ् प्र. (पा ४, ३,६८)। c) विप. (संस्था-)। तस्येदमीयः अण् प्र.। d) भावे ष्यञ् प्र. (पा ५, १,१२४)। e) विप.। बस.। f) पस.। g) कस.। पूप. ह्रस.। h) वैप १ द्र.। i) कस.।

१४, १३; १८, २३, ४; आपश्रौ २२, ४, २; ६,१०$^2$; १२, १६; बौश्रौ १५, १८ : ७; १६, २५ : १४; १८, १५ : ११; २३ : ६; १०; १५; २७ : २-११; ३४ : १२; ३९ : ७; २६, १४ : १२; माश्रौ ३, ६, ११; ७, १; हिश्रौ १७,२,१; ५७; ५८$^2$; द्राश्रौ ६, ३,१; लाश्रौ २,१०,२२;८,१२, १२; १४; १०, ९, ६; १०, १; क्षुसू १, ४ : ३३; ७ : २१; २५; २८;३०; ८ : ८; १६; २८; ९ : ७; २, १ : १६; २३; ५ : २०; ७ : ७; १४; ९ : २०-२३; ३, ३ : ९; १४; ४ : १; ३; ८; ५ : ३; ६ : १; ७ : ३; ८ : १; ३; ११ : ३०; १६ : ८; १३; निसू ३, १० : ४२; ४, ८ : ३२; ९ : २४; ६,३ : ९; ४ : ८; २२;५ : ११; ७ : ४९; ११ : २३; १३ : ६; १९; ७, २ : १०; ४ : ३९: ५१; ५ : ४२; ८,६ : ४९; १०, ७ : १; —मानि निसू ८, ६ : ३१; ९,३ : ५; —म्नः आश्रौ ९, ९,९; शांश्रौ १०,१३,२०; ११, १४,३५; १५, १४; १४,५७,५; वैताश्रौ २५,१; क्षुसू १,२ : १४; २३; ७ : ३०; ११ : २५; निसू ४, ११ : ९; ६,१३ : ३८; —म्ना द्राश्रौ ९,३,२३; लाश्रौ ३,७,८; क्षुसू १, १० : १७; ३, ३ : ४; —म्नि लाश्रौ ६, २, ८; निसू ६, १३ : ३६; —म्ने वैताश्रौ २३, ६.

अग्निष्टोमसाम-संधिसामन्[a]— -म्नोः लाश्रौ २,९,१९.

अग्निष्टोमसामा ( म-आख्या->)ख्य[b]— -ख्यम् जैश्रौका १९५.

अग्निष्टोम-स्तोत्र— -त्रम् माश्रौ २,५,२,१९; हिश्रौ ९,४,२७; —त्रात् हिश्रौ १०,५,११.

अग्निष्टोमस्तोत्रीय— -यौ निसू ६,११ : २१.

अग्निष्टोम-स्तोम— -मैः शांश्रौ १५,६,६; ७.

अग्निष्टोमा ( म-अ )तिरात्र[a]— -त्राणाम् काध २८२ : २; —त्रौ काश्रौ १५,९,१८.

अग्निष्टोमा( म-आ )दि[b]— -दयः आश्रौ १०, १, १२; —दिभिः शंध १३८.

अग्निष्टोमादि-यज्ञ[c]— -ज्ञानाम् वैगृ ३,२१ : ५.

१अग्निष्टोमा( म-अ)यन[c]— -नम् बौश्रौ २६,१२ : ६.

२अग्निष्टोमा(म-अ)यन[b]— -नेषु आश्रौ ७,१,१८.

अग्निष्टोमीय— > °यस्तोत्र[c]— -त्रे वैश्रौ १६,१९ : १.

अग्नि-ष्ठ,ष्ठा[d]— पा ८, ३, ९७; —ष्ठः शांश्रौ १६, ३, ४; १२, ५; काश्रौ ८, ८, २०; आपश्रौ २०, १३, ११; २१, १४, १३; बौश्रौ १७,११ : १०; १३ : १५; माश्रौ ५,२, १२, १४$^2$; वाश्रौ ३, ४, १, ५४; वाधूश्रौ ३,७९, २४; हिश्रौ १४, ३, १३; १९; कौगृ १, ९,९; बौपि १, १ : १; —ष्ठम् आश्रौ २, ६, ५; आपश्रौ १४,५,१२; १७, १७, ७; २२, ७; २०, ९, ६; १९, ६; बौश्रौ १,४ : २७; १५,१४ : ३; १७ : ८; १८ : १०; २२ : १७; ३६ : ६; १७, १२ : ३; २६,१०:२१; २३; २४ : ५; ६; माश्रौ १, १, २,३; ५, २, १२, ४; वाश्रौ १, २, ४, १९; ३, २, ६, ७; २८; वाधूश्रौ ३, ७९ : २१; ८१ : ३; ८६ : १२; वैश्रौ ४,४ : १; हिश्रौ ९,८,७; २३; २४; १२,५,३७; ६,२८; १४, २, ३८; अप २३, ५,२; —ष्ठस्य शांश्रौ २, १६, २; आपश्रौ ६, २८, ७; बौश्रौ १७, ११ : ५; २६, २३ : ९; १०; भाश्रौ ६,६,६; वाश्रौ ३, २, ६, १९;२९; वैश्रौ २,११ : ४; हिश्रौ ३, ८, ६; —ष्ठा काश्रौ ६, ३, ९; आपश्रौ ९, २०, ७; —ष्ठाः वैश्रौ २०, ३९ : ९; —ष्ठात् आश्रौ २, ६,२?[e]; आपश्रौ १४, ५, १०$^2$; ६,८; २०, १३,१३; माश्रौ १, २,१,२३; ७,६, ६; ५, २, १२, ९; १६; वाश्रौ १, २, ३,५; ३, २,६,९;३०; हिश्रौ ९, ८, ११; २६; २७; वैगृ ३,१६ : ९;—ष्ठाम् काश्रौ ६, ३, १५; आपश्रौ ७, १०,३; ९;११,९; बौश्रौ ४,४: २४, ३०; ४०; २०, २६ : ४६; २७ : १; २५,३४ : १; २६,२३: २; भाश्रौ ७, ८, १४; माश्रौ १, ८,२,१९; वाश्रौ १, ६, ३, १३; ३, २, ६, ३०; वैश्रौ १०, ८: १३; ९ : ३; १२; हिश्रौ ४, २, ४८; ५५; ५६$^2$; ७१; कौगृ १,१२,८; शांगृ १,२०, ३; —ष्ठायाः माश्रौ १,८, २, २८; —ष्ठे शांश्रौ ६,९, ६; काश्रौ ८, ८,१६; २०, ६,२; ८,१५; २१,

*a*) द्वस. । *b*) विप. । बस. । *c*) कस. । *d*) वैप १, परि. च द्र. । *e*) पाठः ( BC. अग्निष्ठात् इति च )? अग्निः, तान् इति द्वि-पदः शोधः (तु. सपा. मा २,३०)।

१,८; आपश्रौ १,२,१०; १४, ५,१२;६,१३; बौश्रौ १,१: १६; १४,१९ : १५; १५,२३: ४; ८-११; २६ : ५; ९[३]; १६, २९ : १०;१७,११ : १४; भाश्रौ १,३,२;माश्रौ१,१,१,२२;५,२, १२,७;१७; वाश्रौ १,२,१,११; ३, २,६,३२;४,३,१२; वाधूश्रौ ३, ८६ : ६; वैश्रौ ३, ३ : ८; हिश्रौ १,२,२१; ९,८, ७; ३१; १६,२,३; आग्निगृ ३,५, १ : २; –ष्ठेन आपश्रौ १४, ५, १५; वाधूश्रौ ३,८१ : १.

अग्निष्ठ-प्रथम[a]– -मान् आपश्रौ १३,५,६; हिश्रौ ९,८,४.

अग्निष्ठ-वर्जम् वाश्रौ ३, २, ६, २०.

अग्निष्ठा-देश[b]– -शम् काश्रौ ६, ३,५.

अग्निष्ठा(ष्ठ-अ)न्त– -न्तम् वाश्रौ ३,२,६,१६.

अग्नि-ष्वा(<स्वा)त्त[c]– -त्तम् अप २३, १, ३; –त्ताः आश्रौ २, १९, २१†; आपश्रौ ८, १५, १७[२]; वैश्रौ ९,८ : ११; –०त्ताः आश्रौ २, १९, २२; शांश्रौ ३, १६,७; आपश्रौ ८, १५, १७; वैश्रौ ९,८ : ११; वैताश्रौ ३०, १४; कौसू ८७,२७; अअ १८, ३; –त्तान् आपश्रौ ८,१५, १९; बौश्रौ ५,१४ : १५; भाश्रौ ८, १८, २२†; वैश्रौ ९,८ : १२; हिश्रौ ५,४,६६†; अप ४३,५, ३८; शंध ११६ : २४; शुप्रा ३, १५०†; याशि २, ८७†; –त्तानाम् शांश्रौ ३,१६,७; काश्रौ १५, १०, १६; १९, ३, २४; –†त्तेभ्यः शांश्रौ ३, १६, २; काश्रौ ५,८,१२;९,७; आपश्रौ ८,१३,१६; १५, १७; २०,१४, १३; कागृउ ४२ : १९; बौश्रौ ५,१४ : १२[२]; भाश्रौ ८,१५, १४; माश्रौ १,७, ६, ६; वाश्रौ १,७,४,१२; वैश्रौ ९, ८ : १०; हिश्रौ ५,४,१५;१९; ६७; १४, ३,१८.

अग्नि-संयुक्त– -क्तानि हिश्रौ ५, २, ७.

अग्नि-संयोग[b]– -गः मीसू ११, २, २८;३,१६.

अग्नि-संयोज(न>)नी[d]– -नी बौश्रौ २३,९ : ११.

अग्नि-संसर्ग– -र्गे कौसू ९३,१६.

अग्नि-संस्कार– -रः वागृ ५,५; विध २२,२८; –राः बौश्रौ २३,१९ : १६.

अग्निसंस्कारा(र-अ)र्थ– -र्थम् बौश्रौ २४,१७ : ५.

अग्नि-संस्पृ(ष्ट>)ष्टा– -ष्टा अप २२,३,२.

अग्नि-सकाश– -शम् मागृ १,११, ९; –शे माश्रौ १, ६,३,१०;१२.

अग्नि-सत्क्रिया[b]– -या कप्र ३, ५, १६.

?अग्निसन्ता[e]– -न्ताम् शंध ११६ : १८.

अग्नि-समाधान[b]– -नम् कागृ ४५, २; गोगृ १,१,१४.

अग्नि-समारोपण[b]– -णम् बौश्रौ २९,५ : २०.

अग्नि-समीप– -पम् काश्रौ २०, २, ३; –पे बौपि २, १०,२.

अग्नि-संमार्जन[b]– -ने हिश्रौ ५,२,८.

अग्नि-सव[f]– -वेन बौश्रौ १०, ५८ : ५†.

अग्नि-सह[g]– -हम् बौश्रौ २७,८ : ४;

अग्नि-सालोक्य[b]– -क्यम् विध ९२, १३.

अग्नि-सूर्या(र्य-अ)निल[h]– -लाः बृदे ६, ५०; –लानाम् ऋअ २, ८, १८.

१अग्नि-स्तम्भ[b]– -म्भः सु ४,६.

२अग्नि-स्तम्भ[i]– -म्भाः[j] बौश्रौप्र १७ : १२.

अग्नि-स्थान[b]– -ने जैगृ १,२३ : २.

१अग्नि-स्पर्श[b]– -र्शः बौश्रौ २६, ३१ : १८.

२अग्नि-स्प(र्श>)र्शा[a]– -र्शाम् आपध १, २५, ३; हिध १,६ ७८.

अग्निहवन-बलिहरण[h]– -णयोः गौध २,८.

अग्नि-हविस्[h]– -विषोः मीसू ८, ४,८.

†अग्नि-हुत[i]– -तः माश्रौ २, ४,१, ४४;४, २९; ५,१, ३३; ३,११; १५;२६[k]; २९; –तस्य वैताश्रौ १९,१६.

†अग्नि-होतृ[c]– -ता चाअ ४१ : १६; –तृभ्यः आपश्रौ १४,२२, ५; बौश्रौ २२, ५ : १८; हिश्रौ १५,८,३१.

---

*a*) विप. । बस. । *b*) पस. । *c*) वैप १, परि. च द्र. । *d*) विप. । उस. उप. सं √युज्>योजि +युच् प्र. । *e*) पाठः? °न्तसा– (विप. [स्वाहा =स्वधा-]) इति शोधः । *f*) वैप १ द्र. । *g*) विप. ([साऽग्नि-] अग्न्याधेय-) । 'अग्निना सहते [युज्यते]' इत्यर्थे उस. । उप. <√सह् [*संयोगे] कर्तरि । *h*) द्वस. । *i*) व्यप. (ऋषि-विशेष-) । व्यु.? । *j*) बहु.<आग्निस्तम्भि- । *k*) सपा. आपश्रौ १४, ४,११ विशिष्टः पाभे. ।

१अग्नि-होत्र[a]- -त्रः वैध १,७, ५; -त्रौ[b] शांश्रौ १४, ३,१५.

२अग्नि-होत्र[c]- -त्रम् आश्रौ २,१, ३;२,१६;९,२; ३,१०,१७;३१; ११,१९;१२,४;१०; १२,४,५; शांश्रौ २,६,१;३,१२,१५; १६; ४,५, ११; ८,१३,६; १०,१४, २; काश्रौ २,१, १७; ४,२,४९; १०,४;१९,१,१५; २४,४,२४; २९; ६, ३४; २५, ११, २२; आपश्रौ १, १,२;११,१; ५,१७, ६;२२,१०;१३;२३,२;३; २७, १४;६,१,१;५,१;७;६,१; १०, ८;१४,४;१५,१४; ७,७,४; ८, ८,२३; ९,२,४; ६; ६,३; १०; ७,१;३;४;९; ८,२[२]; ५; ९,६; १०,६; ११, ५; १०,१३, १०; १४,४;१३,२५,९; १५,११,९; १२,८; १६,३२,४; १८,१०,१; २२, ९; २०,१, १६; २३,१०, ९; २४, १, ६; काठश्रौ १६; काश्रौसं २७: ६; ३१ : ६; ३५: ५;१०; बौश्रौ २,७ : २८; १८: ३१;३,२ : ३;४ : २०; १७: १; २;५,१० : १९; १४,८: २; ३; १९ : ८; २३ : ११; १२; १८; १९;२४ : ३;८; १६; २३; १५, ३ : २; १८,२० : १०; १९,२ : ९;२०,१ : १०;१८ : ३[२]; २४ : १; २३,१ : २३; २४; २४,४ : ६; ११:१४;१६; १७ : ५;२३ : ७;२९ : १; २[२]; ३० : १; १६; ३१ : ५; २५, ७ : ९; १६ : २; २६,१८ : १९;१९ : १०;२९,१; ३३ : १४;२८,५ : १;३;९:१२; १२ : ६;८;२०;२६;३१;२९,७ : ५; ९:१३;११ : १२; भाश्रौ १, ११,७;९; ४,१,३; ५,१०,१२; १३,४; ५;१२; १९,१३; ६,७, १;८,१८;९,६;७;१०,५;११,७; १४,१०;१८;१८,११;९,३, २; ३;६;८;९,६;११[२];१५[२];१०,४; ९;१०;११, ४; १२,१; १४,१; १८;११,११,१०; १२,९; माश्रौ १,१,३,८;६, १,८; २९; ३७[२]; ५४; ३,२,२; ८-१२;३,६[२]; ५, १४[d]; वाधूश्रौ २,३ : ४;१० : १; ३, १० : २; १९ : २७; २८; २९; २१ : १; ७[२]; २२ : १०; १४;१५; २४ : १४; १५; २५ : १;३;५; १३; २६ : १; २७ : ६; ७;२९ : ७[२]; ३४ : १;४; ६; ७; १०; १२; ३५ : १;२;४; ३७ : ७-९; ३९ : ३; ४० : २-५; ७; ८;७० : ५; ४,२५ : ४;३२ : ३; ३८ : ३, ३९ :३[२]; ५[२]; ७-१७; ८७: १;९४ : ४;६;९;९८ : ३; ७; वाश्रौ १, १, १, ८६; २,२, ३३; ४, ४, ३७; ५, २, ७; ९; ३४; ३, ७; १०; ६, २, ५; ३,३,४,३९; ४०; वैश्रौ १,१४ : ७; १७ : १-४; १९ : २१; २, १ : १[२]; ९ : ६;७; ८[२];१३; ३, १ : ९; २ : १९; ४,१ : १; ८, २ : १३; १३, १४ : १; १८, २१ : ८; २०, १ : ३;५ : २;६; ११ : ७; १२ : ५;६[२]; १३ : १; २; ४; ९; १४ : १; ७; १६ : १२; १८ : २; १९ : १; २१ : १; २२ : २; ४; हिश्रौ १,१, ५; २,१;-४, २०; ३, १, १२; १४; १५; ४, ५३; ५, १८[२]; ७,१; २८; ११६; ११७[२]; ८,८६; ६, १,३२;५,३३; १३,७,२७; १४, १,१०; १५, १, ४२; ४५[२]; २, १४; १६;२०[२];२२; २६; २७[२]; ३०; ३२; ३४; ३,५; १८; २५; ३१[२]; १८, ४, ४; २४, ५, ३; द्राश्रौ १३,४,१६; लाश्रौ ५, ४, २३; १०,११,३; १२,१०; १८, १४; वैताश्रौ १, १६; ७, १; २; १६; ८,३; १२, १; ४३, ५; ८; निसू २, ५ : ३; २०; ३१; कौगृ ३,१०,३५[२]; ५,६, ३; शांगृ २, १६, ४; ५; १७, १; आग्निगृ १, २,१ : १२; २, ४,४ : २०; ३, ५,१ : ५; ११; ७,३ : १; ५;७; ९,३ : १७; कागृउ ४० : १४; ४१ : १७; वौगृ ३,१ : २३; वौपि १,१ : ४; १०; वैगृ १,१ : ९; २,७ : १३; १८ : १४; हिपि २१ : ५; ६; २२ : ११; कप्र ३, १,८; कौसू ७२, ४३; ८०, २५; अप्राय १, २[३]; ३[२]; ५; २, १; ८[३]; ३, ६[४]; ४, ३; ४[४]; ५, १[२]; २[२]; ४; अप ४१, ३, १२; ४५,१,१; ५; २,१; वाध ६, २; शंध ११; १३८; २८४; आपध १,१४,१; बौध २,२, ७६; १०, २२; ३, ३, ५-७; ७, १५; विध ५९,२; ६८,६; वैध १, ५,५;७, ३; २,३,४; ६, २; हिध १, ४, ३५; गौध ८,१७; शुअ १,१७२; भाशि १०६; मीसू ५, १, ३०; -त्रयोः काश्रौ २२,८, २; बौश्रौ

a) त्रिप. पुँ., नाप. च। 'अग्नौ होत्रं हवनं यस्य' इति कृत्वा बस. हवनशील-पर्यायश्च, अग्निहोत्रनिष्ठ-सोमयाग-पर्यायश्च। b) उत्तरेण समस्तमिति C.। c) नाप.। 'अग्नौ हूयते' इति कृत्वा उस.।
d) पाभे. पृ २६ b टि. द्र.।

